# लिट् लकारः

**लिट् लकारस्य द्वे रूपे स्तः**

| **द्वित्व** | **अनुप्रयोग** |
|---|---|
| उदाहरणम् - पठ् = प् + **अ** + ठ्<br><br>पठ् धातौ एकमेव “अच्” वर्णः (अ) अस्ति \| एतादृश धातोः लिट् लकारं रूपं द्वित्व प्रत्यये भवति \| | उदाहरणम् - जागृ = ज् + **आ** + ग् + **ऋ**<br><br>जागृ धातौ द्वौ “अच्” वर्णौ स्तः \| एतादृश धातोः लिट् लकारं रूपं अनुप्रयोग प्रत्यये भवति \| |
| बहवः धातवः एतादृश सन्ति \| | एतादृश प्रयोगः विरलः भवति \| |
| औपदेशिक (not derived from anything else) धातवः (पठ्, लिख् इत्यादिनः) साधारणतया द्वित्व लिट् रूपम् अनुसरन्ति \| | णिच् प्रत्यय रूपाणि (पाठयति - पाठि) साधारणतया अनुप्रयोग लिट् रूपम् अनुसरन्ति \| |
| | चुरादिगण धातवः अपि साधारणतया अनुप्रयोग लिट् रूपम् अनुसरन्ति \|<br><br>**उदाहरणानि**<br><br>चोरयांचकार ( कृ धातोः द्वित्व रूपैः “चकार” सह  चुरादिगण धातु)<br><br>चोरयाम्बभूव (भू धातोः रूपैः सह)<br><br>चोरयामास (अस् धातोः रूपैः सह) |

**द्वित्व प्रयोगः**

1. **प्रथमं धातोः वर्णविच्छेदनम् कृत्वा द्विवारं लिखतु | एवम् :**

लिख् लिख्

ल् + इ + ख्      ल् + इ + ख्

पूर्व पदम् “अभ्यास” अस्ति | मूल धातु “अनभ्यास” अस्ति |

2. **प्रथम पुरुषे एकवचने :**

**अभ्यासकार्यम् -१ :** अभ्यास पदे “हलादि शेषः” - अर्थात् अभ्यास पदे केवलम् आदि “हल्” वर्णः तिष्ठति | अन्य “हल्” वर्णान् त्यजतु | यदि धातोः ह्रस्व “अच्” अस्ति तर्हि तस्य अभ्यासपदे किमपि परिवर्तनं न भवति।

**गुणकार्यम् :** यदि धातोः उपधा ह्रस्व “इक्” अस्ति तर्हि तस्य अभ्यासपदे किमपि परिवर्तनं न भवति | मूलपदे (अनभ्यासपदे) “इक्” वर्णस्य स्वस्य गुणेन परिवर्तनं भवति | एवम् :

ल् + इ + ख् ल् + ए + ख्

“इ” वर्ण: गुणपरिवर्तेनेन “ए” भवति

“उ” वर्ण: गुणपरिवर्तेनेन “ओ” भवति

“ऋ” वर्णः गुणपरिवर्तेनेन “अर्” भवति |

एकवचने अन्ते “अ” जोडयतु | एवम् :

ल् + इ + ल् + ए + ख् + अ = **लिलेख** (लिख् धातोः प्रथम पुरुष एकवचन रूपम्)

Note: उपधा = penultimate letter (ल् + इ + ख् - अतः लिख् धातोः उपधा "इ" अस्ति)

3. **प्रथम पुरुषे द्विवचने बहुवचने च :** द्विवचने बहुवचने **गुण कार्यं नास्ति** । अभ्यास कार्यं समानम्।

**प्रथमम् :** यदि धातोः ह्रस्व "अच्" अस्ति तर्हि तस्य अभ्यासपदे मूलपदे च किमपि परिवर्तनं न भवति | एवम् :

ल् + इ + ख् ल् + इ + ख्

**अभ्यास कार्यम् -१ :** अभ्यास पदे "हलादि शेषः" - अर्थात् अभ्यास पदे केवलम् आदि "हल्" वर्णः तिष्ठति | अन्य "हल्" वर्णान् त्यजतु | द्विवचने अन्ते "अतुः" जोडयतु | बहुवचने अन्ते "उः" जोडयतु | एवम् :

द्विवचनम् - ल् + इ + ल् + इ + ख् + अतुः = **लिलिखतुः** (लिख् धातोः प्रथम पुरुष द्विवचन रूपम्)

बहुवचनम् - ल् + इ + ल् + इ + ख् + उः = **लिलिखुः** (लिख् धातोः प्रथम पुरुष बहुवचन रूपम्)

======================= उदाहरणानि ================================

**मिल् धातु :**

म् + इ + ल् म् + इ + ल्

एकवचने : म् + इ + म् + ए + ल् + अ = मिमेल

द्विवचने : म् + इ + म् + इ + ल् + अतुः = मिमिलतुः

बहुवचने : म् + इ + म् + इ + ल् + उः = मिमिलुः

**दिश् धातु :** (आदिशति उपदिशति इत्यादिनां रूपाणि)

द् + इ + श् द् + इ + श्

एकवचने : द् + इ + द् + ए + श् + अ = दिदेश

द्विवचने : द् + इ + द् + इ + श् + अतुः = दिदिशतुः

बहुवचने : द् + इ + द् + इ + श् + उः = दिदिशुः

आदिशति क्रियापदम् अस्ति चेत् तस्य लिट् रूपाणि : आदिदेश आदिदिशतुः आदिदिशुः

**भिद् धातु :**

भ् + इ + द् भ् + इ + द्

**अभ्यास कार्यम् - २:** यदि आदि वर्णः महाप्राणवर्णः अस्ति तर्हि अभ्यास पदे तस्य वर्णस्य अल्पप्राणरूपं भवति | एवम् :

एकवचने : ब् + इ + भ् + ए + द् + अ = बिभेद

द्विवचने : ब् + इ + भ् + इ + द् + अतुः = बिभिदतुः

बहुवचने : ब् + इ + भ् + इ + द् + उः = बिभिदुः

**क्षिप् धातु :**

क् + ष् + इ + प् क् + ष् + इ + प्

**अभ्यास कार्यम् - ३:** यदि आदि वर्णः “क” वर्गः अस्ति तर्हि अभ्यास पदे तस्य वर्णस्य “च” वर्गः भवति |

"क्" अस्ति चेत् "च्" भवति | "ख्" अस्ति चेत् "छ्" भवति | ....एवम् :

एकवचने : च् + इ + क् + ष् + ए + प् + अ = चिक्षेप

द्विवचने : च् + इ + क् + ष् + इ + प् + अतुः = चिक्षिपतुः

बहुवचने : च् + इ + क् + ष् + इ + प् + उः = चिक्षिपुः

**मुच् धातु :**

म् + उ + च्      म् + उ + च्

एकवचने : म् + उ + म् + ओ + च्+ अ = मुमोच

द्विवचने : म् + उ + म् + उ + च् + अतुः = मुमुचतुः

बहुवचने : म् + उ + म् + उ + च् + उः = मुमुचुः

**मृश् धातु :** (to touch)

म् + ऋ + श् म् + ऋ + श्

Note: यदि "अच्" वर्णः "ऋ" अस्ति तर्हि मूलपदे तस्य वर्णस्य एकवचने "अर्" रूपेण परिवर्तनं भवति | एवम् :

एकवचने : म् + अ + म् + अर् + श् + अ = ममर्श

द्विवचने : म् + अ + म् + ऋ + श् + अतुः = ममृशतुः

बहुवचने : म् + अ + म् + ऋ + श् + उः = ममृशुः

**पठ् धातु :**

प् + अ + ठ् प् + अ + ठ्

**वृद्धि कार्यम्:** यदि “अच्” वर्णः “अ” अस्ति तर्हि अनभ्यास पदे एकवचने “अ” “आ” भवति | एवम् :

एकवचने : प् + अ + प् + आ + ठ् + अ = पपाठ

**Note:** द्विवचने बहुवचने च “अभ्यासस्य लोपः” भवति, अनभ्यास पदे “अ” वर्णस्य “ए” रूपेण परिवर्तनं भवति | एवम् :

द्विवचने : प् + ए + ठ् + अतुः = पेठतुः

बहुवचने : प् + ए + ठ् + उः = पेठुः

**हस् धातु :**

ह् + अ + स् ह् + अ + स्

**अभ्यास कार्यम् ४:** यदि आदि वर्णः “ह्” अस्ति तर्हि अभ्यास पदे तस्य वर्णस्य “ज्” रूपेण परिवर्तनं भवति | एवम् :

**Note:** यदि आदिम वर्णस्य परिवर्तनं भवति तर्हि अभ्यास लोपः ’अ’ कारस्य ’ए’ कारादेशः न भवति ।

द्विवचने : ज् + अ + ह् + अ + स् + अतुः =जहसतुः

बहुवचने : ज् + अ + ह् + अ + स् + उः = जहसुः

**वच् धातु** :

व् + अ + च्     व् + अ + च्

**अभ्यास कार्यम् ५:** अभ्यास्पदे आदि वर्णस्य सम्प्रसारण परिवर्तनं भवति | सम्प्रसारणे यणः इक्  :

य् -> इ, व् -> उ, र् -> ऋ, ल् -> ऌ

मूलपदे अच् "अ" अस्ति | अतः एकवचने स्वरस्य वृद्धि भवति | एवम् :

एकवचने :  उ + व् + **आ** + च् + अ = उवाच

मूलपदे अच् "अ" अस्ति अतः द्विवचने बहुवचने च अभ्यासस्य लोपः भवति | एवम् :

द्विवचने : ऊ (??) + च् + अतुः = ऊचतुः
बहुवचने  : ऊ (??) + च् + उः = ऊचुः

**दा धातु :**

द्+ आ +   द् + आ

**अभ्यास कार्यम् ६:** यदि अच् वर्णः दीर्घः अस्ति तस्य स्थाने ह्रस्वः भवति || एवम् :

**आ अन्तस्य विशेष कार्यम् : एकवचने आ औ भवति**

एकवचने : द्+अ द्+आ (औ)-ददौ

द्विवचने : द्+अ+द् +(आ- लोप)+अतुः=ददतुः

बहुवचने : द्+अ+द् +(आ- लोप)+उः=ददुः

**भा धातु** :

भ् + आ    भ् + आ

एकवचने : ब् + अ + भ् + औ  = बभौ
द्विवचने : ब् + अ + भ् + अतुः = बभतुः
बहुवचने : ब् + अ + भ् + उः = बभुः

**गै धातु** :

एचन्त धातवः आकारान्त परिवर्तनं स्वीकुर्वन्ति |

ग् + आ    ग् + आ

**अभ्यास कार्यम् ७:** यदि आदि वर्णः "ग्" अस्ति चेत् अभ्यासपदे तस्य "ज्" रूपेण परिवर्तनं भवति |

एकवचने : ज् + अ + ग् + औ  = जगौ
द्विवचने : ज् + अ + ग् + अतुः = जगतुः
बहुवचने : ज् + अ + ग् + उः = जगुः

**ध्यै धातु** :

ध् + य् + आ    ध् + य् + आ

अभ्यासपदे "ध्" वर्णस्य अल्पप्राणरूपं तिष्ठति |

एकवचने : द् + अ + ध् + य् + औ  = दध्यौ

द्विवचने : द् + अ + ध् + य् + अतुः = दध्यतुः
बहुवचने : द् + अ + ध् + य् + उः = दध्युः

**स्था धातु** :

स् + थ् + आ      स् + थ् + आ

**अभ्यास कार्यम् ८:** यदि धातौ “शर्” वर्णस्य परे “खर्” वर्णः अस्ति तर्हि अभ्यास्पदे “खर्” एव तिष्ठति | एवम् :

थ् + आ      स् + थ् + आ

अनन्तरं अजन्त धातूनां नियमाः उपयुङ्क्ताम् |

एकवचने : त् + अ + स् + थ् + औ = तस्थौ
द्विवचने : त् + अ + स् + थ् + अतुः = तस्थतुः
बहुवचने : त् + अ + स् + थ् + उः = तस्थुः

**गम् धातु** :

ग् + अ + म्      ग् + अ + म्

एकवचने : ज् + अ + ग् + आ + म् + अ = जगाम
द्विवचने : ज् + अ + ग् + म् + अतुः = जग्मतुः
बहुवचने : ज् + अ + ग् + म् + उः = जग्मुः

---

# आत्मनेपदि-रूपाणि

अन्ते एते भवन्ति - एकवचने – ए , द्विवचने - आते , बहुवचने - इरे

वृध् धातुः

व् + ॠ + ध् + व् + ॠ + ध् => व् + अ + व् + ॠ + ध् { ॠ-कारस्य अकारः, अन्भ्यासे गुणः न )

- ⇨ व् + व् + ॠ + ध् = ए => ववृधे ( एकवचने ) – अपवादः – गुणः न अभवत्
- ⇨ ववृध् + आते => ववृधाते ( द्विवचने )
- ⇨ ववृध् = इरे => ववृधिरे ( बहुवचने )

काश् धातुः

क् + आ + श् + क् + आ + श् => क् + अ + क् + आ + श् + ए ( अभ्यासे आ -> अ भवति )

- ⇨ क् + अ + क् + आ + श् + ए => च् + अ + क् + आ + श् + ए ( क वर्गस्य च वर्गः )
- ⇨ चकाशे ( एक वचने )
- ⇨ चकाशाते ( द्विवचने )
- ⇨ चकाशिरे ( बहुवचने )

एतादृशाः अन्य धातवः

वन्द् ( ववन्दे ) , मुद् ( मुमुदे ), विद् ( विविदे ), गर्ह् ( जगर्हे ), भास् ( बभासे ), वृत् ( ववृते )

लभ् – धातुः ( अपवादः ? )

लेभे लेभाते लेभिरे

एतादृशाः अन्य धातवः

पद् ( पेदे ), मन् ( मेने ), यत् ( येते) , रम् ( रेमे ), सह् ( सेहे ), त्रप् ( त्रेपे ), जन् ( जज्ञे )

कृ – धातुः उभयपदि

परस्मैपदी => चकार चक्रतुः चक्रुः

आत्मनेपदी => चक्रे चक्राते चक्रिरे

## अनुप्रयोग-लिट्

परस्मैपदिनः

| धातुः | प्रथमरूपम् | द्वितीयरूपम् | तृतीयरूपम् |
|---|---|---|---|
| उष् | ऑषाञ्चकार | ऑषामास | ऑषांबभूव |
| विद् | विदाञ्चकार | विदामास | विदांबभूव |
| जागृ | जागराञ्चकार | जागरामास | जगरांबभूव |
| भी | बिभयाञ्चकार | बिभयामास | बिभयांबभूव |
| हु | जुहुवाञ्चकार | जुहुवामास | जुहुवांबभूव |

आत्मनेपदिनः

| | | | |
|---|---|---|---|
| इन्धू | इन्धाञ्चक्रे | इन्धामास | इन्धांबभूव |
| ईक्ष् | ईक्षाञ्चक्रे | ईक्षामास | ईक्षांबभूव |
| एध् | एधाञ्चक्रे | एधामास | एधांबभूव |

उभयपदिनः

| | | | |
|---|---|---|---|
| भृ | बिभराञ्चकार/बिभराञ्चक्रे | बिभरामास | बिभरांबभूव |
| चुर् | चोरयाञ्चकार/चोरयाञ्चक्रे | चोरयामास | चोरयांबभूव |